चौखम्बा-संस्कृत-ग्रन्थमाला।
( ग्रन्थसंख्या १७ )

# प्रकरणपञ्चिका

नाम

## प्रभाकरमतानुसारि—मीमांसादर्शनम् ।

महामहोपाध्यायश्रीशालिकनाथमिश्र-
विरचितम् ।
भट्टकरोपनामक श्रीमुकुन्दशास्त्रिणा शोधितम् ।



काश्याम् ।

विद्याविलास-नाम्नि यन्त्रालये, हरिदासगुप्तेन
मुद्रयित्वा प्रकाशितम् ।
सन् १९०४ ईस्वी

वैक्रम संवत् १९६१

शुभम् ।

॥ श्रीः ॥

# ॥ विज्ञापनम् ॥

अयि सकलमीमांसारसपिपासवस्तत्रभवन्तो धिषणैकधना धीरवराः। इदं वो विदितमस्तु संप्रति सन्ति नानाविधा मुद्रिता अमुद्रिताश्च जगति लब्धप्रतिष्ठाः परश्शता मीमांसासन्दर्भा भट्टमतप्रतिपादकाः। किन्तु तत्र गुरुमतस्य पूर्वपक्ष एव विलोक्यते न तु सिद्धान्तः, अत्र महामहोपाध्यायप्रभाकरापरपर्यायगुरुमतस्य राद्धान्तो ऽस्ति, प्रभाकरशिष्यः शालिकनाथ इमं निबन्धं जग्रन्थ सो ऽयं प्रकरणपञ्चिकाऽभिधः प्रबन्धः सर्वांशेनोत्तमतया ऽतीव प्राचीनतया च खण्डितोऽपि लोके प्रकाशमर्हतीति सुविचार्य प्रथमतः ७८ पत्रात्मक एव काशीविद्यासुधानिधिनामके पण्डितपत्रे श्रीमन्महाशयग्रिभिथसाहबानुमत्या विद्वज्जनमनोरञ्जनाय संशोध्य विट्ठलशास्त्रिणा संमुद्य प्रकाशितः। ततो व्यतीतेषु कतिपयेषु वर्षेषु कस्य चिन्महाराष्ट्रब्राह्मणस्य सद्मनि तस्यैव पुस्तकस्य शततमपत्रमारभ्य षड्विंशतिर्जीर्णानि पत्राणि समुपलभ्य श्री ६ परमगुरुवरबालशास्त्रिचरणैः पण्डितपत्रे संमुद्य प्रकाश्य समाप्तिमनायि लिखितश्चान्तिमे पत्रे समाप्ता चेयं प्रकरणपञ्चिकेति अत एवास्येयत्तापि सम्यगेव निश्चिता, यतो यावत्पर्यन्तं च खण्डितोऽस्ति तत् पत्रयोरधष्टिप्पणीदानेन विशदीकृतमस्ति। खण्डितोऽपि संस्कृतप्रौढतया ग्रन्थस्यैकस्याध्ययनेन गुरुमतस्य व्यक्तमेव शीघ्रं ज्ञायमानतयाऽवश्यमेव सङ्ग्राह्योऽयं निबन्धराजः सम्प्रति पण्डितपत्रस्य कतिपयभागस्य दुर्लभतया बहुशो ऽन्वेषणेन लब्धे ऽपि परस्परनिरपेक्षनानाग्रन्थकतिपयपत्रसंवलिततया प्रत्यङ्कं तस्य एकग्रन्थस्य कृते ऽनेकग्रन्थसङ्ग्रहप्रयासबाहुल्यं विलोक्य, अल्पेनैव मूल्येन विद्यार्थिजनस्य सौलभ्याय पण्डितपत्रादुद्धृत्य श्रीमन्महामहोपाध्यायचित्रधरमिश्रस्य पुस्तकमेकं प्राप्य, तेन अडकरोपनामकमुकुन्दशास्त्रिद्वारा पुनरपि संशोध्य स्वकीयविद्याविलासनाम्नि यन्त्रालये मुद्रयित्वा प्राकाश्यं नीतः। अत्र कृतेऽपि शोधनप्रयासे दृष्टिदोषात् सीसकाक्षरयोजनादोषाद् वा जातस्खलनं स्वयं संशोध्य सफलयन्तु मत्परिश्रमं महाशया इति करयुगलमुकुलितं विधाय भूयो भूयः प्रणतः प्रार्थयामि श्रीमतो गुणैकपक्षपातिनो धीमतः।

चौखम्बासंस्कृतमासिकपुस्तकाध्यक्षो हरिदासगुप्तः।

॥ श्रीः ॥

# मीमांसासारसङ्ग्रहः

श्रीशङ्करभट्टकृत ।

वाराणसेयसेंट्रलहिन्दूकालेजसम्बन्धिरणवीरसंस्कृतपाठ-
शालायां वेदान्तशास्त्राध्यापनपदमलङ्कुर्वाणेन द्राविड-
श्रीलक्ष्मणशास्त्रिणा परिशोधितः ।

काश्याम्

विद्याविलासनाम्नियन्त्रालये, हरिदासगुप्तेन,
मुद्रयित्वा प्रकाशितः ।
सन् १९०४ ईस्वी
वैक्रम संवत् १९६१

शुभम् ।

॥ श्रीगुरुः शरणम् ॥

# भूमिका ।

अस्ति पूर्वमीमांसाशास्त्रं नाम वेदवाक्यार्थतत्त्वावधारणापेक्षितन्यायकलापसन्दृब्धं सर्वदर्शनशीर्षण्यतया पुरस्क्रियमाणं महर्षिजैमिन्याचार्यस्य सर्वस्वभूतमिति सर्वसम्प्रतिपन्नोऽयमर्थः ।

न जातु जैमिनीयन्यायावतारमन्तरा केचिदपि वेदवाक्यानां वाक्यान्तराणाञ्च सामञ्जस्यमुपपादयितुमीशते इति भवति सर्वेषां तत्तदपेक्षितांशव्याकरणायैतदपेक्षेत्येतदपि न परोक्षं शास्त्ररसिकानाम् । तदेवमतिप्रामाणिकमौपनिषदानामपि स्वापेक्षितवाक्यार्थनिर्धारणविधाववश्याभ्यर्हिततया सर्वेभ्यः समुत्कर्षशालि मीमांसादर्शनं शबरस्वामिप्रभृतिभिराचार्यैर्भाष्यादिनिबन्धप्रणयनद्वारा सुविवृतमप्यतिविस्तरतयाऽत्यन्तदुरूहार्थजटिलतया चाऽनाघ्रातमीमांसागन्धानां तत कथमप्युपकारलेशमसम्भाव्य केवलमापाततस्तत्तदधिकरणगतप्रधानविषयकथनमात्रेणैवतच्छास्त्रप्रतिपाद्यमर्थजातं मनस्याकलय्य क्रमेणैतच्छास्त्रे प्रविविक्षूणां सुखावबोधायातिसङ्क्षेपेण* सर्वाण्यधिकरणान्यतिसरलैः पद्यैः सङ्कलयन् प्रणिनाय मीमांसासारसङ्ग्रहं नाम प्रकरणं विद्वदग्रेसरः श्रीमान् शङ्करभट्टः ।

तमिमं ग्रन्थमुपदर्शितरीत्या विषयसूचनिकामुद्रया सर्वजनोपयोगिनमवधार्य मुद्रणद्वारा प्रचिकाशयिषुश्चौखम्बासीरीजपुस्तकावलीकार्यसम्पादकः श्रीयुतहरिदासगुप्तः पुस्तकावल्या संयोज्य प्रकाशयितुमुदयुङ्क्त । आसादितवाँश्चायं नानाविधदुर्लभग्रन्थसम्पादनरसिकात्काशीस्थसुप्रसिद्धश्रीयुतश्रीगोविन्ददासमहाशयात्पुस्तकमेकम् । अथाहं तदीयप्रार्थनयैतत्संशोधने प्रवृत्तो मदीयपुस्तकमपि पाठभेदनिर्धारणायोपयोज्य पुस्तकद्वयसाहाय्यात्सम्पादितशोधनकार्यः प्रार्थये विपश्चिद्वरान् महाशयान् यदत्र प्रमादात्स्खलितानि समीकृत्योदारचरितैर्महाशयैर्विधेयो दृष्टि प्रसाद इति शम् ।

आश्विनकृष्ण १० बुधे<br>संवत् १९६०

जटापाठ्युपनामको<br>लक्ष्मणशास्त्री द्राविड

---

* यद्यपि लोके जैमिनीयाधिकरणानि सहस्रसङ्ख्याकानीति प्रसिद्धिरस्त्यथाऽपि तानि सङ्ख्यायमानानि न तावतीं संख्यामासादयन्ति परं भाष्य वार्तिक– शास्त्र दीपिका–धिकरणरत्नमाला–दिनिबन्धपरिदर्शितविषयवर्णकादिभेदं पुरस्कृत्य कथञ्चित्सहस्रसङ्ख्यापरिपूर्तिर्विहितेति प्रतिभाति परीक्षः मदभिमतञ्च मत्कृतटिप्पण्यां मतभेदप्रयुक्तमधिकरणान्तरत्वमिति तत एव ज्ञेयम् ।

श्रीगणेशाय नमः ।

# मीमांसासारसङ्ग्रहः ।

नत्वा गणेशवाग्रामगुर्वङ्घ्रीन्भट्टशङ्करः ।
सहस्रं वक्ति सिद्धान्तान् सार्द्धश्लोकशतद्वयात् ॥

| | | |
|---|---|---|
| | अधीतिरत्र दृष्टार्था | १ |
| १ | *धर्ममानं च चोदना । | २ |
| २ | धर्मो ऽर्थश्चोदनागम्यो | ३ |
| | न तन्मानापरीक्ष्यता ॥ १ ॥ | ४ |
| | प्रत्यक्षलक्षणोक्तिश्च | ५ |
| १ | स्वतः प्रामाण्यवर्णनम् । | ६ |
| २ | शब्दार्थान्वयनित्यत्वम् | ७ |
| ३ | उपवर्षमतं ततः ॥ २ ॥ | ८ |
| ४ | निरालम्बनवादोऽथ | ९ |
| ५ | शून्यवादस्य दूषणम् । | १० |
| ६ | अनुमानपरिच्छेदः | ११ |
| ७ | शब्दप्रामाण्यवर्णनम् ॥ ३ ॥ | १२ |
| ८ | प्रामाण्यमुपमानस्या | १३ |
| ९ | ऽप्यर्थापत्तेश्च वर्णनम् । | १३ |
| १० | प्रामाण्योक्तिर(१)भावस्य | १५ |
| ११ | स्फोटवादनिराक्रिया ॥ ४ ॥ | १६ |
| १२ | आकृतिस्थापनं चाथा | १७ |

---

* दक्षिणपार्श्वगता अङ्काः भाष्यवार्तिकगतप्रधानविषयवर्णकादिभेदं सूत्रसूचितमुपजीव्याऽवाधिकरणसङ्ख्यापूर्तिरिति ज्ञापका इति ज्ञेयम् ।

(१) अभावस्य अनुपलब्धेरित्यर्थः ।

## इति प्रथमाध्यायस्य प्रथमः पादः ।



## इति प्रथमाध्यायस्य द्वितीयः पादः ।



---

( १ ) भाष्यमते इदमुदाहरणम् ।

( २ ) वार्तिकमते इदमुदाहरणम् ।

इति प्रथमाध्यायस्य तृतीयः पादः ।



इति प्रथमाध्यायस्य चतुर्थः पादः ।

---

(१) सा – गौणता ।

पादाधिकरणानां सङ्ख्या

२५–५–१९–२०

अध्यायाधिकरणसङ्ख्या ६९*

## अथ द्वितीयोऽध्यायः ।

| | | |
|---|---|---|
| १ | धर्मैः प्रतिपदं न तु । | १ |
| २ | भावार्थस्य फलार्थत्वम् | २ |
| | अपूर्वं द्वारमस्ति नः ॥ १८ ॥ | ३ |
| १ | आख्यातद्वैधमिष्टं नः | ४ |
| २ | प्रधानं कर्म वक्ति तत् । | ५ |
| ३ | गुणंकर्मोपरं वक्ति | ६ |
| | संमार्गो गुणकर्म च ॥ १९ ॥ | ७ |
| | स्तोत्रशस्त्रप्रधानत्वम् | ८ |
| | मन्त्राः स्युरभि(१)धायकाः । | ९ |
| | मन्त्रलक्षणमन्त्रोक्तम् | १० |
| | लक्षणं ब्राह्मणस्य च ॥ २० ॥ | ११ |
| | ऊहादेश्चाप्यमन्त्रत्वम् | १२ |
| | ऋग्लक्षणमथोदितम् । | १३ |
| | सामलक्षणमप्युक्तम् | १४ |
| | यजुषां लक्षणं तथा ॥ २१ ॥ | १५ |
| | निगदानां यजुष्ट्वं स्यात् | १६ |
| | परिमाणं यजुर्मनोः । | १७ |
| | यजुर्भेद इषेत्वादौ | १८ |
| १ | अनुषङ्गो ऽथ वर्णितः ॥ २२ ॥ | १९ |
| २ | चित्पत्यादौ चानुषङ्गो | २० |
| | व्यवाये(२)स न सम्मतः । | २१ |

इति द्वितीयाध्यायस्य प्रथमः पादः ।

---

* अधिकरणरत्नमालानुसारेणाधिकरणसङ्ख्या ४२ ।

(१) वि इति पु० पा० । (२) सः अनुषङ्गः ।

भिन्नं शब्दान्तरात्कर्मा १
ऽभ्यासादपि कर्मभित् ॥ २३ ॥ २
विद्वद्वाक्ये ऽनुवादः स्या ३
दन्तरा यज्विधिर्मतः । ४
तथाऽऽघाराग्निहोत्रे च ५
पशुसोमवचोस्तथा ॥ २४ ॥ ६
सङ्ख्यया कर्मभेदो ऽथ ७
संज्ञया च स इष्यते । ८
गुणाच्च कर्मभेदः स्यात् ९
अग्निहोत्रे तु नास्त्ययं ॥ २५ ॥ १०
इन्द्रियार्थे दधीष्टं नः ११
कर्मान्यद्रेवतीश्रुतौ । १२
१ हीषादे र्न फलार्थत्वम् १३
२ व्यवस्था निधनेषु च ॥ २६ ॥ १४

## इति द्वितीयाध्यायस्य द्वितीयः पादः ।

बृहत्सामाद्यभिन्नत्वम् १
अवेष्टेर्हि भिदा मता । २
वसन्ताधानविधिता ३
दाक्षायणगुणात्फलम् ॥ २७ ॥ ४
वायव्यादौ यजिर्विधिः ५
वत्सालम्भो यजिर्न तु । ६
स्वरूपधाने ऽप्येवं स्यात् ७
पात्नीवतयजिर्न च ॥ २८ ॥ ८
अंश्वदाभ्यौ ग्रहावेवा ९
ग्निर्गुणो न यजिर्मतः । १०
प्राक्रियान्तरतो भेदः ११
फलसंस्कार्ययोस्तथा ॥ २९ ॥ १२
सन्निधौ कर्मभेदो ना १३
ऽऽग्नेयेऽमामा(१)त्रयुज्यपि । १४

(१) अमामावयुज्यपि, आग्नेयोऽष्टाकपालोऽमावास्याया भवतीत्यत्र कर्मभेदो नेत्यर्थः ।

इति द्वितीयाध्यायस्य तृतीयः पादः ।

यावज्जीवे कर्मविधिः १
शाखाभेदे न कर्मभित् ॥ ३० ॥ २

॥ इति द्वितीयाध्यायस्य चतुर्थः पादः ॥

पादाधिकरणानां संख्या

२१—१४—१४—२

अध्यायाधिकरणसङ्ख्या ५१ *

सर्वसङ्ख्यैक्यं १२०

## अथ द्वितीयो ऽध्यायः

तृतीयार्थप्रतिज्ञा ऽर्थः १
पारार्थ्यं शेषलक्षणम् । २
निरस्तो बादरेः पक्षो ३
ऽवघातादेर्न सङ्करः ॥ ३१ ॥ ४
व्यवस्थितं स्फ्यादिकार्यं ५
मारुण्यं च व्यवस्थितम् । ६
ग्रहैकत्वविवक्षा न ७
चमसेषु न संमृजिः ॥ ३२ ॥ ८
अनर्थके ऽङ्गावतारः ९
प्रयाजाङ्गमभिक्रमः । १०
दर्शाङ्गमुपवीतं स्यात् ११
नेष्ट्यङ्गं वारणादि च ॥ ३३ ॥ १२
वार्त्रघ्न्यौ न प्रधानाङ्गम् १३
उत्तराङ्गं न वाग्यमः । १४
चतुर्धाऽऽग्नेय एव स्यात् १५

इति तृतीयाध्यायस्य प्रथमः पादः ।

---

* अधिकरणरत्नमालाऽनुसारेणाधिकरणसङ्ख्या ४७ ।

१ गौण्या वृत्तेस्तथा(१)ऽस्तिता ॥ ३४ ॥ १

२ मुख्यार्थाङ्गं मनुर्लिङ्गाद् २

गौणार्थाङ्गं श्रुतेर्मतम् । ३

हविष्कृल्लक्षयेत्कालम् ४

वाग्विसर्गे तथैव च ॥ ३५ ॥ ५

सूक्तवाकेऽङ्गत्वमिष्टम् ६

विभागः सूक्तवाकके । ७

मा(२)नान्तरे प्रमा लिङ्गम् ८

श्रुतिश्च सति सम्भवे ॥ ३६ ॥ ९

भक्षमन्त्रे विभागः स्यात् १०

तृप्तिमन्त्राविभक्तता। ११

प्रस्थिता देवता नोह्या १२

तथा पात्नीवते ग्रहे ॥ ३७ ॥ १३

त्वष्टा नोह्यत तत्रैव १४

त्रयस्त्रिंशदपीदृशाः । १५

देवश्चानुवषट्कारे १६

नैन्द्राग्ने त्विन्द्रपीतवाक् ॥ ३८ ॥ १७

नानाछन्दस्ययं मन्त्रो १८

नैन्द्रे नोहो न नास्तिता । १९

## इति तृतीयाध्यायस्य द्वितीयः पादः ।

वेदधर्मस्तूच्चतादिः १

उपांश्वाधानसाम च ॥ ३९ ॥ २

उ(३)भयश्रुति भूयस्त्वात् ३

प्रक्रिया विनियोक्त्र्यपि । ४

क्रमश्च विनियोक्ता स्यात् ५

समाख्या विनियोजिका ॥ ४० ॥ ६

१ श्रुत्या लिङ्गस्य बाधः स्यात् ७

२ वाक्यस्यापि च लिङ्गतः । ८

(१) सर्थादितीति पु० पा० ।

(२) मानान्तरे सत्येव लिङ्गं प्रमाणं न तु निरपेक्षमित्यर्थः ।

(३) उभयोः यजुः सामवेदयोः श्रुतिर्यस्य तत् भूयस्त्वान्निर्णयमित्यर्थः ।

| | | |
|---|---|---|
| ३ | वाक्यात्प्रकरणं बाध्यम् | ९ |
| ४ | स्थानं प्रकरणेन च ॥ ४१ ॥ | १० |
| ५ | स्थानात्समाख्या बाध्या स्यात् | ११ |
| ६ | प्राग्बाधस्तथेरितः। | १२ |
| | अहीनता च प्रकृतेः | १३ |
| | द्विबहुप्रतिपत्तथा ॥ ४२ ॥ | १४ |
| | जाघन्युत्कर्षणं नैवो- | १५ |
| | त्कर्षः सन्तर्दने मतः। | १६ |
| | नाद्ये प्रयोगे प्रवृञ्ज्यात् | १७ |
| | पूष्ण्युत्कृष्या प्रपिष्टता ॥ ४३ ॥ | १८ |
| | चरावेव तु सोत्कृष्या | १९ |
| | नैन्द्रापौष्णे तु सामता। | २० |

## इति तृतीयाध्यायस्य तृतीयः पादः।

| | | |
|---|---|---|
| | निवीतं न विधेयं स्यात् | १ |
| | विधौ(१)नत्पुंप्रधानके ॥ ४४ ॥ | २ |
| | उपवीतं तु दर्शाङ्गम् | ३ |
| १ | उपवीते विधिर्मतः। | ४ |
| २ | यज्ञोपवीतिनोनासौ | ५ |
| | पुरोदक्कं विधिर्न तु ॥ ४५ ॥ | ६ |
| | विधेया तूपरि धृतिः | ७ |
| | दिग्विभागो निवीतवत्। | ८ |
| | पूर्णतादि च तद्वत्स्यात् | ९ |
| | विधिर्नानृतमित्ययम् ॥ ४६ ॥ | १० |
| | जृम्भामन्त्रः क्रतोरङ्गम्। | ११ |

---

(१) मनुष्यप्रधाने कर्मणि निवीतं श्रुत्या विहितमित्यर्थः। निवीतं मनुष्याणामित्यत्रोल्लेखस्तु मनुष्यप्रधानविषयत्वाद्दैवकर्मणि निवीतमयोग्यमुपवीतं तु योग्यमिति उपवीतस्तुत्यर्थम्। अयं स्तुतिप्रकारोऽधिकरणान्ते वार्तिके प्रदर्शितः तन्त्रराणके च निवीतस्य श्रुत्या मनुष्यप्रधाने कर्मणि विहितत्वं स्पष्टीकृतम् तदनुसारेणाऽत्र सिद्धान्तभेदः प्रदर्शितः।

ना(१)वगोरणवर्जनम् । १२

उदक्या भाषा हानं च १३

स्वर्णधारणमेव च ॥ ४७ ॥ १४

जयास्त्रेतावत्कर्माङ्गम् १५

अश्वदानेष्टिरेव च । १६

दातुः सैवेष्टिरुदिता १७

कर्माङ्गवमने यजिः ॥ ४८ ॥ १८

सा(२)यष्टृवमने कार्या १९

नाग्नेये सर्वदानता । २०

नैकस्माच्छेषकार्यं स्यात् २१

एकस्माच्चेत्तदाद्यतः ॥ ४९ ॥ २२

चतुर्धाकरणं भक्षः २३

## इति तृतीयाध्यायस्य चतुर्थः पादः ।

शेषकार्यं न चाज्यतः । १

सार्कप्रस्थाय्ये च तद्व(३)त् २

सौत्रामण्यां ग्रहेषु च ॥ ५० ॥ ३

तन्त्रं तत्सर्वपृष्ठायाम् ४

तन्त्रं तच्चैन्द्रवायवे । ५

१ सोमे(४)भक्षो भवत्येव ६

२ स समाख्यानिमित्तकः ॥ ५१ ॥ ७

३ उद्गातृभक्षः स्तोतॄणाम् ८

४ भक्षो ग्रावस्तुतो भवेत् । ९

५ वषट्कारो भक्षहेतुः १०

६ होमश्चाभिषवस्तथा ॥ ५२ ॥ ११

समुच्चयो भक्षणानाम् १२

व(५)षट्कर्ताऽऽदितः पिबेत् । १३

अनुज्ञाप्य च भक्षस्स्यात् १४

---

(१) क्रत्वङ्गं नेत्यर्थं ।

(२) यजमानवमने सा इष्टि कार्येत्यर्थः ।

(३) शेषकार्यं नेत्यर्थं ।

(४) अधिकरणमालानुसारेणाऽधिकरणभेद ।

(५) वषट्कर्ता होता आदौ पिबेत् ।

| | |
|---|---|
| मन्त्रेण च तदिष्यते ॥ ५३ ॥ | १५ |
| तन्मन्त्रस्य विभागः स्यात् | १६ |
| पात्रैक्ये चोपहूतता । | १७ |
| भक्षापनेत्री याज्येष्टा | १८ |
| स्तिभिनी चमसोयजौ ॥ ५४ ॥ | १९ |
| ब्रा(१)ह्मणा दश भक्षेयुः | २० |

इति तृतीयाध्यायस्य पञ्चमः पादः ।

| | | |
|---|---|---|
| | प्रकृतौ पर्णतादि च । | १ |
| | साप्तदश्यं तु विकृतौ | २ |
| १ | नित्यं(२)नैमित्तिकं जपेत् ॥ ५५ ॥ | ३ |
| २ | काम्यं(३)तयोर्बाधकं वा | ४ |
| | ऽऽधानं नेष्ट्यर्थमिष्यते । | ५ |
| | न क्रत्वङ्गं तदङ्ग्यङ्गम् | ६ |
| | इष्ट्यर्था नेष्टयो मताः ॥ ५६ ॥ | ७ |
| | पशुसामान्यविध्यन्तः | ८ |
| | समानो दोहयोर्विधिः । | ९ |
| | ग्रहधर्माश्च सर्वार्थाः | १० |
| | रशनायूपयोस्तथा ॥ ५७ ॥ | ११ |
| | ग्रहाङ्गमंश्वदाभ्यार्थम | १२ |
| | र्चित्रिण्याद्यग्निधर्मकम् । | १३ |
| | स्तिभिन्यः सोमविकृतिः | १४ |
| | साम्यं प्रतिनिधौ विधेः ॥ ५८ ॥ | १५ |
| | पूतिकेष्वप्येवमेव | १६ |
| | संस्थानां न समो विधिः | १७ |

इति तृतीयाध्यायस्य षष्टः पादः ।

| | |
|---|---|
| अङ्गाङ्गिनोर्बर्हिरादिः | १ |
| फलार्थं वचनादि च ॥ ५९ ॥ | २ |

(१) राजन्यो नेतश्चमसे इति पु० पा० ।

(२) हस्यनुसारेणेदम् ।

(३) भाष्यानुसारादिदम् ।

| | | |
|---|---|---|
| | साङ्गार्थौ सौमिकी वेदिः | ३ |
| | अभिमर्शमनू(१)तथा। | ४ |
| | सोमाङ्गं दक्षिणा दीक्षा | ५ |
| | वेदेर्यूपाङ्गता न च ॥ ६० ॥ | ६ |
| | हविर्धानं देशपरम् | ७ |
| | दक्षिणावत्सु चर्त्विजः | ८ |
| | भिन्नाः स्युस्ते च वरणैः | ९ |
| | चमसाध्वर्यवस्तथा ॥ ६१ ॥ | १० |
| | बहुश्रुतेस्तेऽपि नाना | ११ |
| | तत्रापि दश ते मताः। | १२ |
| | ऋत्विग्भ्यः शमिता नान्यः | १३ |
| | उपगाश्च तथा मताः ॥ ६२ ॥ | १४ |
| | सोमविक्रय्यन्य इष्टः | १५ |
| | स्युः सप्तदश चर्त्विजः। | १६ |
| | नियता दक्षिणाभिस्ते | १७ |
| | स्वामी सप्तदशो मतः ॥ ६३ ॥ | १८ |
| | स(२)मानविधिताऽग्नीनाम् | १९ |
| १ | सामाख्या पुंनियामिका। | २० |
| २ | तद्वा(३)धश्च विशेषेण | २१ |
| | प्रशास्ता क्वचिदेव तु ॥ ६४ ॥ | २२ |
| | चमसेऽध्वर्युबाधो न | २३ |
| | समाख्या चोदकावरा। | २४ |

## इति तृतीयाध्यायस्य सप्तमः पादः।

| | | |
|---|---|---|
| १ | परिक्रयः स्वामिकर्म | १ |
| २ | वचनात्तु स(४)र्त्विजाम् ॥ ६५ ॥ | २ |
| १ | पुंसंस्कारा याजमानाः | ३ |
| २ | वचनादृत्विजामपि। | ४ |

(१) अभिमर्शमन्त्रौ साङ्गार्थावित्यर्थः।

(२) स्वमते वर्णकमिदम्।

(३) पूर्वाधिकरणांश इति शास्त्रदीपिका।

(४) अधिकरणभेदे विवादः एवमुत्तरत्राऽपि।

इति तृतीयाध्यायस्याष्टमः पादः ।

पादाधिकरणानां सङ्ख्या ।

१५—१९—२०—२३—२०—१७—२४—२७

अध्यायाधिकरणसङ्ख्या १६५*

सर्वसङ्ख्यैक्यं २८५

---

*अधिकरणरत्नमालानुसारेणाध्यायाधिकरणसङ्ख्या १५१ ।



## अथ चतुर्थोऽध्यायः ।



### इति चतुर्थाध्यायस्य प्रथमः पादः ।

| | | |
|---|---|---|
| | कालादौ नियमो विधिः। | ९ |
| | द्रव्ये गुणश्रुतिश्चैवम् | १० |
| | संस्कारे च तथैव नः॥ ७९॥ | ११ |
| १ | यागस्य लक्षणं प्रोक्तम् | १२ |
| २ | होमलक्षणमेव च। | १३ |
| ३ | दानलक्षणमप्यत्र | १४ |
| ४ | प्रयोगो(१)यागहोमयोः॥ ८०॥ | १५ |
| ५ | द्रव्यदेवान्वयो यागो | १६ |
| ६ | होमआसेचनाधिकः। | १७ |
| | आतिथ्यादौ बर्हिरेकम् | १८ |

## इतिचतुर्थाध्यायस्यद्वितीयः पादः।

| | | |
|---|---|---|
| | द्रव्यादौ न फलार्थता॥ ८१॥ | १ |
| | काम्यनैमित्तिके ऽनित्ये | २ |
| | दध्यादेरुभयार्थता। | ३ |
| | पयोव्रतं तु क्रत्वर्थं | ४ |
| | फलं विश्वजितो ऽस्ति च॥ ८२॥ | ५ |
| | तत्रानेकन्त्वेकमेव | ६ |
| | तत्रापि स्वर्ग एव नः। | ७ |
| | फलं रात्रिष्वर्थवादात् | ८ |
| | न स्वर्गस्तु फले श्रुते॥ ८३॥ | ९ |
| | दर्शादि सर्वकामार्थम् | १० |
| | प्रयोगैक्येन तन्मतम्। | ११ |
| | पश्वाद्यामुष्मिकमपि | १२ |
| | बृहस्पतिसवाङ्गता॥ ८४॥ | १३ |
| | वैमृधः पौर्णमास्यङ्गम् | १४ |
| | कालः स्यादाग्निमारुते। | १५ |
| | दर्शोत्तरं सोमयागो | १६ |
| १ | जातेष्टौ पुत्रपूतता॥ ८५॥ | १७ |
| २ | जातकर्मोत्तरं सेष्टि | १८ |
| ३ | नाशौचे सा स्वकालगा। | १९ |

(१) वार्तिककारव्याख्यानानुसारेणेदम्।

बृहस्पतिसवो ऽप्येवम् २९

## इति चतुर्थाध्यायस्य तृतीयः पादः ।

राजसूये यजेः फलम् ॥ ८६ ॥ १
विदेवनादि तस्याङ्गम् २
सौम्ये नोपसदङ्गता । ३
आमनाः साङ्ग्रहण्यङ्गम् ४
नित्य एव दधिग्रहः ॥ ८७ ॥ ५
वैश्वानरो निमित्ते स्यात् ६
षष्ठी नैमित्तिकी चितिः । ७
पितृयज्ञो न दर्शाङ्गम् ८
यूपाङ्गं रशना परा ॥ ८८ ॥ ९
स्वरुः पश्वञ्जनाङ्गं स्यात् १०
दर्शे कालयुजां फलम् ११
ज्योतिष्टोमे सोमय(१)जेः १२

## इति चतुर्थाध्यायस्य चतुर्थः पादः ।

पादाधिकरणानां संख्या

२० । १८ । २० । १२ ।

अध्यायाधिकरणसङ्ख्या ७०*

सर्वसङ्ख्यैक्यं ३५५

## अथ पञ्चमोऽध्यायः ।

१ क्रमः श्रुत्या नियम्यते ॥ ८९ ॥ १
२ क्रमो वैधः पाञ्चमिकः २
३ सत्रे दीक्षाक्रमः श्रुतेः ३
पाकाग्निहोत्रयोरर्थौ ४
नियतो न त्वमानतः ॥ ९० ॥ ५

---

(१) फलमित्यनुवर्तते ।

* अधिकरणरत्नमालाऽनुसारिण्यध्यायाधिकरणसङ्ख्या ६२ ।

| | | |
|---|---|---|
| | पाठक्रमाक्रमश्च स्यात् | ६ |
| | द्विपश्वादौ प्रवृत्तितः | ७ |
| १ | स्या(१)नात्साद्यस्कपशुषु | ८ |
| २ | क्रमश्चेतरयोस्ततः ॥ ९१ ॥ | ९ |
| | मुख्यक्रमात्तदङ्गानाम् | १० |
| | पाठो मुख्यक्रमाद् बली | ११ |
| | विधिपाठान्मन्त्रपाठः | १२ |
| | क्रमान्मौख्याच्च चोदकः ॥ ९२ ॥ | १३ |
| | प्रातरादिश्रुतौ सद्य | १४ |
| १ | उत्कर्षे च तदादिता । | १५ |
| २ | तदन्तस्यापकर्षः स्यात् | १६ |
| | सौमिकाः प्रोक्षणाद्यनु ॥ ९३ ॥ | १७ |
| | यूपे श्रुतापकर्षः स्यात् | १८ |
| | एवं प्रासङ्गिके मतः । | १९ |
| | अपूर्वे च स एवेष्टो | २० |
| | ऽग्निहोत्रोत्कर्षणं न च ॥ ९४ ॥ | २१ |
| | षोडश्युत्कर्षकं चोक्थ्यं | २२ |

## इति पञ्चमाध्यायस्य प्रथमः पादः ।

| | |
|---|---|
| पदार्थो ऽनुसमीयते । | १ |
| काण्डानुसमयश्चोक्तो | २ |
| मु(२)ख्यादौ स च वर्णितः ॥ ९५ ॥ | ३ |
| चतुःखण्डितहोमे ऽसौ | ४ |
| यूपानैक्ये ऽञ्जनादिषु । | ५ |
| पशुत्ववत्ते साजात्यात् | ६ |
| नानाबीजेषु चाप्ययम ॥ ९६ ॥ | ७ |
| पृषदाज्ये पात्रभेद | ८ |
| आगन्त्वन्तर्निवेशनम् । | ९ |
| देवनाद्यपकृष्येत | १० |

(१) नाधिकरणान्तर किन्त्वर्थसिद्धम् ।

(२) माधवमतेनाधिकरणभेद. ।

| | |
|---|---|
| दीक्षा सांविन्नतः परा ॥ ९७ ॥ | ११ |
| ततो दीक्षितसंस्काराः | १२ |

इतिपञ्चमाध्यायस्यद्वितीयः पादः।

| | |
|---|---|
| प्रयाजैकादशैः पशोः। | १ |
| तत्र स्वस्थानवृद्धिः स्यात् | २ |
| नान्ते धाय्या निवेश्यते ॥ ९८ ॥ | ३ |
| आङ्गं तृचोन्ते पर्यासात् | ४ |
| गायत्र्यादिषु सामसु। | ५ |
| ग्रहेष्टकं तु सोमाग्न्योः | ६ |
| चित्रिण्याद्यास्तु नान्ततः ॥ ९९ ॥ | ७ |
| लोकम्पृणा तदन्ते वा | ८ |
| ऽग्निहोत्रादीष्टितः परम् | ९ |
| क्रत्वन्ते त्वग्निचित्कर्मा | १० |
| इष्ट्यन्ते दीक्षितस्य ते ॥ १०० ॥ | ११ |
| पाठक्रमः क्रतूनां ना | १२ |
| ग्निष्टोमविकृतिः परा। | १३ |
| सा च सर्वानसंस्थैव | १४ |
| नैकस्तोमग्रहो ऽत्र च ॥ १०१ ॥ | १५ |

इति पञ्चमाध्यायस्य तृतीयः पादः।

| | |
|---|---|
| श्रुत्यर्थाभ्यां पाठबाधः | १ |
| प्रवृत्तेर्मुख्यतस्तथा। | २ |
| विकल्पः सोमपूर्वत्वे | ३ |
| सो ऽपि वर्णत्रयस्य च ॥ १०२ ॥ | ४ |
| सोमे ऽप्यूत्वादिबाधः स्यात् | ५ |
| नाज्योत्कर्षश्च सोमतः। | ६ |
| सद्यस्काला च विकृतिः | ७ |
| सोमोर्ध्वं दोहवैकृतं ॥ १०३ ॥ | ८ |
| दर्शोर्ध्वा सोमविकृतिः | ९ |

इति पञ्चमाध्यायस्य चतुर्थः पादः।

पादाधिकरणानांसङ्ख्या

२२ । १२ । १५ । ९

अध्यायाधिकरणसङ्ख्या ५८

सर्वसङ्ख्यैक्यं ४१३

## अथ षष्ठोऽध्यायः

| | |
|---|---|
| स्वर्गः साध्यो न साधनम् । | १ |
| तिर्यगादेर्नाधिकारः | २ |
| स्यात्स्त्रिया अप्यधिक्रिया ॥ १०४ ॥ | ३ |
| दंपत्योश्च सहैवासौ | ४ |
| नाधाने पुंद्वयस्य सा । | ५ |
| यावदुक्तेः स्त्रियाः सेयम् | ६ |
| अपशूद्रं च सा मता ॥ १०५ ॥ | ७ |
| प्रतीकारे ऽद्रव्यवतो | ८ |
| ऽप्यङ्गाभाववतस्तथा । | ९ |
| नाङ्गाभावाप्रतीकारे | १० |
| नित्य(१)साग्नेरधिक्रिया ॥ १०६ ॥ | ११ |
| आर्षेयवरणात्सा स्याद् | १२ |
| रथकारस्य चाहितौ । | १३ |
| स्थपतेश्च निषादस्य | १४ |

इति षष्ठाध्यायस्य प्रथमः पादः ।

| | |
|---|---|
| सत्रे प्रत्येकमेव च ॥ १०७ ॥ | १ |
| विवक्षिता कर्तृसङ्ख्या | २ |
| प्रारब्धस्य समापनम् । | ३ |
| लौकिके नैष नियमः | ४ |
| कलञ्जप्रतिषेधनम् ॥ १०८ ॥ | ५ |
| नियमा उपनीत्यूर्ध्वम् | ६ |

* अधिकरणरत्नमालानुसारेणाधिकरणसङ्ख्या ५४ ।

(१) इदं च नाधिकरणान्तरम् ।

नाशक्त्या कालहापनम् । ७
जीवनं जीवने कर्म ८
होमश्च प्रतिभेदतः ॥ १०९ ॥ ९
एवं गुर्वनुगत्यादौ १०
सोमादेश्चापि नित्यता । ११

इति षष्ठाध्यायस्य द्वितीयः पादः ।

अशक्त्या त्वङ्गहानं स्यात् १
काम्ये तु न तदिष्यते ॥ ११० ॥ २
कर्माभेदो द्रव्यभेदे ३
द्रव्यादेः प्रतिनिध्ययः । ४
न देवतादेः समतः ५
प्रतिषिद्धस्य नापि सः ॥ १११ ॥ ६
स्वामिनो न प्रतिनिधिः ७
सत्रे स च मृतस्य तु । ८
आनीतोऽसौ न च स्वामी ९
फलिसंस्कारभाक्तु सः ॥ ११२ ॥ १०
सदृगेव प्रतिनिधिः ११
यवा न व्रीह्युपक्रमे । १२
पूतीकश्च प्रतिनिधिः १३
नासौ प्रतिनिधेर्मतः ॥ ११३ ॥ १४
पूतीकसदृगग्राह्यम् १५
नीवारे मुख्यमेव तत् । १६
संस्कारेषु कृतेष्वेवम् १७
प्रयोजनकृतौ न तु ॥ ११४ ॥ १८
संस्कारयोग्यं मुख्यं स्यात् १९
न तु कार्याक्षमं तथा । २०
शेषकार्याक्षमं मुख्यम् २१

इति षष्ठाध्यायस्य तृतीयः पादः ।

नाशेऽवत्तस्य चाज्यतः ॥ ११५ ॥ १
एवं शेषावत्तनाशे २
सर्वे भक्षास्तथर्त्विजाम् । ३

होमः किं चित्कृत्स्नभेदे ४
सर्वक्षाम(१)र्निमित्तता ॥ ११६ ॥ ५
उभयार्थ्यविवक्षा स्यात् ६
होमाभिषवयोर्न सा । ७
अग्निद्धित्वविवक्षा स्यात् ८
हविरार्तौ क्रियाविधिः ॥ ११७ ॥ ९
सा च क्रिया स्याद्दर्शाङ्गम् १०
सर्वत्यागे च विश्वजित् । ११
वत्सकाले व्रतं च स्यात् १२
असान्नाय्येऽप्यसौ भवेत् ॥ ११८ ॥ १३
प्रतिपाद्याहुतौ शाखा १४

## इति षष्ठाध्यायस्य चतुर्थः पादः ।

ऽभ्युदये च न कर्मभित् । १
देवतापनयस्त्वाज्ये २
निर्वापश्चाविवक्षितः ॥ ११९ ॥ ३
अविवक्षा तण्डुलानाम् ४
तूष्णीमर्थ्ये निरुप्तके । ५
असान्नाय्ये ऽपीयमिष्टिः ६
अक्रीते ऽपि च विश्वजित् ॥ १२० ॥ ७
दीक्षाविक(२)ल्पः प्रकृतौ ८
द्वादश द्वादशाहके । ९
गव्यर्दीक्षा पुरा माघ्या १०
दीक्षितो ऽवभृथावधि ॥ १२१ ॥ ११
प्रतिहोमस्तत्र नास्ति १२
उ*त्कर्षे(३)चाग्नि होत्रकम् । १३
प्रतिहोमश्च नो तत्र १४

---

(१) त्यागनिमित्ततेति पु० पा० ।

(२) वार्तिकमतेनेदम् ।

* नास्तीत्युत्कर्षे इति पु० पा० ।

(३) उदवसानीयोत्कर्षे ऽग्निहोत्रं च उत्कृष्टम् इत्यधिकरणांशोऽयम् ।

† सा – ऽविवक्षा ।

| | |
|---|---|
| प्रकृतौ सायंमादितः ॥ १२२ ॥ | १५ |
| षोडशिनि प्रातरादि | १६ |
| भिन्ने होमो न सर्वगः । | १७ |
| व्यापन्नमार्याभोज्यं स्यात् | १८ |
| सर्वच्छेदे निमित्तता ॥ १२३ ॥ | १९ |
| यौगपद्ये विकल्पः स्यात् | २० |
| क्रमे पूर्वं तु बाध्यते । | २१ |
| परोद्गात्रे सर्वधनम् | २२ |
| कृत्स्ना(१)वृत्तिरहर्गणे ॥ १२४ ॥ | २३ |

## इति षष्ठाध्यायस्य पञ्चमः पादः ।

| | |
|---|---|
| सत्रं कुर्युस्तुल्यकल्पाः | १ |
| कुलायेन तथा भवेत् । | २ |
| सत्रे धिकारी विप्रः स्यात् | ३ |
| वैश्वामित्रश्च तत्समः ॥ १२५ ॥ | ४ |
| आधानाधिकृतः सत्रे | ५ |
| पात्राण्यन्यानि तत्र च । | ६ |
| वैश्यस्यैव न पश्वादि | ७ |

## इति षष्ठाध्यायस्य षष्ठः पादः ।

| | | |
|---|---|---|
| | सर्वस्वं जनकादि न ॥ १२६ ॥ | १ |
| | देया भूर्मण्डलं नापि | २ |
| | न देयः केसरी तथा । | ३ |
| | उपार्ज्यापि न देयं च | ४ |
| १ | धर्मदासस्तथैव च ॥ १२७ ॥ | ५ |
| २ | क्रीता(२)दिर्देय एव स्यात् | ६ |
| | दानकाले च यद्भवेत् । | ७ |
| | दक्षिणार्थं च सर्वं स्यात् | ८ |
| १ | तच्च*विश्वजिदन्तरे ॥ १२८ ॥ | ९ |

(१) कृत्स्नानावृत्तिरिति पु० पा० ।

(२) इदं नाधिकरणान्तरम् । क्रीतादिर्देय इति पु० पा० ।

* भाष्यमतेनेदम् ।

| | | |
|---|---|---|
| २ | भू*य*स्त्वात्तच्च बाध्येत | १० |
| | सर्वस्वं प्राकृताधिकम् । | ११ |
| | सङ्ख्यान्या चापरिमितम् | १२ |
| | सहस्राधिकमेव तत् ॥ १२९ ॥ | १३ |
| | माषपाके विधिर्नास्ति | १४ |
| | सर्वपुंसां(१)विधौ तु सः । | १५ |
| | सहस्रवत्सरं(२)पुंसाम् | १६ |

इति षष्ठाध्यायस्य सप्तमः पादः ।

| | | |
|---|---|---|
| १ | चतुर्होत्रादि लौकिके ॥ १३० ॥ | १ |
| २ | होमा नैव क्रतोरङ्गम् | २ |
| | लौकिके चोपवीतिगाः । | ३ |
| | अपतीष्टिस्तथैव स्यात् | ४ |
| | अवकीर्णिपशुस्तथा ॥ १३१ ॥ | ५ |
| | दैवं शुक्ले ह्युदगये | ६ |
| | पित्र्यं(३)कृष्णे ऽपरायणे । | ७ |
| | नित्यौ याच्ञाक्रयौ सोमे | ८ |
| | प्रैषप्रैषव्रतादि च ॥ १३२ ॥ | ९ |
| | अनित्यं जरणाभावे | १० |
| | मन्त्रश्चागनियामकः । | ११ |

इति षष्ठाध्यायस्याष्टमः पादः ।

पादाधिकरणानां संख्या ।

१४।११।२१।१४।२३।७।१६।११

अध्यायाधिकरणसङ्ख्या ११७†

सर्वसङ्ख्यैक्यं ५३०

---

** वार्तिकमतेनेदम् ।

(१) नाधिकरणान्तरं किन्तु पक्षान्तरम् ।

(२) वत्सरशब्दस्य दिनपरत्वादतिशेष. ।

(३) माधवमतेनेदमधिकरणम् ।

† न्यायाधिकरणरत्नमालाऽनुसारेणाधिकरणसङ्ख्या १०९ ।

## अथ सप्तमोऽध्यायः ।

पारिप्लवा न धर्माः स्युः १
वचनाद्यातिदेशनम् ॥ १३३ ॥ २
स्यात्पञ्चसञ्चरेष्वेवम् ३
चैन्द्राग्नैककपालयोः । ४
द्वितीयपर्वैतच्छब्दम् ५

### इति सप्तमाध्यायस्य प्रथमः पादः ।

गीतिः साम तु नर्क्मता ॥ १३४ ॥ १

### इति सप्तमाध्यायस्य द्वितीयः पादः ।

नामातिदेशकं चाथ १
प्रायणीयपदं न तु । २
सर्वपृष्ठे ऽतिदेशः स्यात् ३
तुषावभृथकर्मभित् ॥ १३५ ॥ ४
तद्द्रव्यं न पुरोडाशो ५
वैष्णवादि न नामवत् । ६
निर्मन्थ्यनातिदेशः स्यात् ७
द्वयोः प्रण(१)यनान्तरम् ॥ १३६ ॥ ८
तत्पर्वणा मध्यमयोः ९
स्वरसामातिदेशकम् । १०
वामो न्मोन क्रियाऽङ्गम् ११
स्तात्रे ऽग्निर्लौकिको मतः ॥ १३७ ॥ १२
स्तुतिस्तूपशयो यूपः १३
पृषैः साधनलक्षणा । १४

### इति सप्तमाध्यायस्य तृतीयः पादः ।

लिङ्गातिदेशः सौर्यादौ १
त्रिध्य(२)न्तो वैदिकस्तु सः ॥ १३८ ॥ २

---

(१) वार्तिकमतमेतदम् ।

(२) वैदिक्या स च सम्मत इति पा० । माधवमतानुसारेण चाधिकरणभेदः ।

चोदकाब्दलवन्नामा

इति सप्तमाध्यायस्य चतुर्थः पादः ।

पादाधिकरणानां सङ्ख्या

५ । १ । १४ । ३ ।

अध्यायाधिकरणसङ्ख्या २३

सर्वं सङ्ख्यैक्यं ५५३ ।

## अथाष्टमोऽध्यायः

| | |
|---|---|
| ऽष्टमा(१)र्थस्य प्रतिश्रुतिः । | १ |
| एकस्मिन्नेकविध्यन्तो | २ |
| यस्य लिङ्गं च तस्य सः ॥ १३९ ॥ | ३ |
| इष्टः सोमेनातिदेशः | ४ |
| दर्शादिष्टिष्वसौ मतः । | ५ |
| सो ऽग्नीषोमीय इष्टः स्यात् | ६ |
| दैक्षाद्यान्यपशुष्वयम् ॥ १४० ॥ | ७ |
| सौत्यादेकादशिन्यांस्यात् | ८ |
| तस्याः पशुगणेषु सः । | ९ |
| अव्यक्तचोदिते सोमाद् | १० |
| द्वादशाहादहर्गणे ॥ १४१ ॥ | ११ |
| गव्यात्तदादिसत्रेषु | १२ |
| निकाय्याद्यात्परेषु सः । | १३ |
| फलादेर्नातिदेशः स्यात् | १४ |
| फलार्थस्य गुणस्य च ॥ १४२ ॥ | १५ |
| सौर्ये मन्त्रव्यवस्था न | १६ |
| तस्याग्नेयाद्य चोदकः । | २७ |
| देवतातो बलिहविः | १८ |
| कृष्णाले च सधर्मता ॥ १४३ ॥ | १९ |

( १ ) अतिक्रामाक्षं नाधिकरणान्तरम् ।

* अधिकरणरत्नमालाऽनुसारेणाऽधिकरणसङ्ख्या २२ ।

आज्यान्मधूदके चासौ २०

इत्यष्टमाध्यायस्य प्रथमः पादः ।

पयसो वाजिने च सः । १
पशौ सान्नाय्यतश्चासौ २
तत्रापि पयसो मतः ॥ १४४ ॥ ३
आमिक्षायां पयस्तोऽसौ ४
सत्राहीनेषु तादृशात् । ५
कौण्डपायि(१)नसत्रत्वम् ६

इत्येमाध्यायस्य द्वितीयः पादः ।

स्थानसाम्यान्न चोदकः ॥ १४५ ॥ १
त्रिवृत्साम्यान्नातिदेशः २
षडहेषु गणत्वतः । ३
द्वादशाहाच्छतोक्थ्ये सः ४
प्राकृतोक्थ्याच्च तत्र सः ॥ १४६ ॥ ५
गायत्रीवर्णलोपान्न ६

इति अष्टमाध्यायस्य तृतीयः पादः ।

१ दर्विहोमे च नामता । १
२ नामैतद्वैदिकानाम २
३ यत्र स्याद्धोमनामता ॥ १४७ ॥ ३
४ नातिदेशो दर्विहोमे ४
५ स्वसौ वचनतः(२)क्वचित् । ५

इत्यष्टमाध्यायस्य चतुर्थः पादः ।

पादाधिकरणानां सङ्ख्या

२० । ६ । ६ । ५ ।

अध्यायाधिकरणसङ्ख्या ३७*

---

(१) कुण्डपाय्ययनस्य सत्रावकारत्वमित्यर्थः ।

(२) राष्ट्रभृद्धोमादेः प्राकरणिकत्वेऽपि विवाहादौ राष्ट्रभृतो जुहोतीत्यादिवचनादतिदेशः । इदमधिकरणान्तरत्वेन भाष्यादौ न दृश्यते ।

* अधिकरणरत्नमालानुसारेणाधिकरणसङ्ख्या २५ ।

सर्वसङ्ख्यैक्यं ५९७

## अथ नवमाऽध्यायः ।



* द्वितीयवर्णकस्य व्याख्याचर्यामिदम् ।

† तृतीयवर्णकस्य व्याख्यादयम् । इदं वार्तिके द्रष्टव्यम् ।

( ३ ) पत्नीयजन्ततात्येन इति पु० पा० ।

( ४ ) तरसे - मांसे । ( ५ ) असौ – ऊहः ।

| | | |
|---|---|---|
| २ | साण्डे क्रयम(१)नौ तथा। | २४ |
| | मध्यामध्रिगुबाधः स्याद् | २५ |
| | गिराबाधस्त्विरापदात् ॥ १५४ ॥ | २६ |
| | इरापदे प्रगाथं स्यात् | २७ |

## इति नवमाध्यायस्य प्रथमः पादः।

| | | |
|---|---|---|
| १ | गीतेः सामादिरूपता। | १ |
| २ | ऊहग्रन्थो न नित्यः स्यात् | २ |
| | साम संस्कारकर्म च ॥ १५५ ॥ | ३ |
| | प्रत्यृचं च समाप्तं तत् | ४ |
| | समासु च तदिष्यते। | ५ |
| २ | रूढः स्यादुत्तराशब्दः | ६ |
| २ | त्रैशोकं विषमासु तु ॥ १५६ ॥ | ७ |
| १ | पृष्ठसाम्नोः प्रगाथः स्यात् | ८ |
| २ | यौधाजयमुखेषु च। | ९ |
| ६ | श्यावाश्वान्धीगवेष्वेष | १० |
| ४ | गव्ये चैन्द्रेषु मद्व्यृचे ॥ १५७ ॥ | ११ |
| | गीतिभेदविकल्पः स्यात् | १२ |
| १ | यद्वचेत्यादिका स्तुतिः | १३ |
| २ | प्रगीता(२)ऽयं सहस्रेति | १४ |
| ३ | यज्ञमंत्रेषु तानता॥ १५८ ॥ | १५ |
| | उत्तरादिषु सामोहः | १६ |
| | तत्र स्तोभातिदेशनम्। | १७ |
| | स्तोभो(३)ऽधिकं विवर्णनं च | १८ |
| १ | प्रत्यक्षात्कार्यकारिता ॥ १५९ ॥ | १९ |
| २ | अभावविधिना तद्वत् | १० |
| ३ | विकारेण च सामता। | २१ |
| ४ | स्वशब्दादपि सा ज्ञेया | २२ |
| ५ | सा निषेधानुवादतः ॥ १६० ॥ | १३ |

(१) क्रयमन्त्रे उक्तो नास्तीत्यर्थः।

(२) प्रगीतोऽयं सहस्रेति पु० पा०।

(३) स्तोभादिकमिति पु० पा०।

परिधौ यूपधर्माः स्युः २४
प्रणीताधर्मवच्छ्रुतम् । २५
पृष्ठसाम्नोरङ्गभेदः २६
कण्वादौ तद्विकल्पनम् ॥ १६१ ॥ २७
द्विसाम्नि चाङ्गभेदः स्यात् २८
पार्वणानतिदेशनम् । २९
व्यवस्थोक्ता पार्वणयोः ३०
प्रयाजा अर्थकर्म च ॥ १६२ ॥ ३१

## इति नवमाध्यायस्य द्वितीयः पादः ।

व्रीह्यादिमन्त्रऊह्यः स्यात् १
पुण्डरीके च दर्भवान् । २
लोके यूपस्पृशौ दोषः ३
ऊह्यौ पाशमनू द्विवत् ॥ १६३ ॥ ४
बहुपाशार्थः प्रकृतौ ५
नोह्यः पत्न्यैकयवान्मनुः । ६
विकृतावप्यसौ नोह्यः ७
नोक्थ्यादावध्रिगुस्तथा ॥ १६४ ॥ ८
१ अनूहश्च प्रतिनिधौ ९
२ प्रियङ्गा(१)व्रूहनित्यता । १०
संसर्गिष्वध्रिगौ नोह्यो ११
ऽभ्यस्यं नत्रैकधेति च ॥ १६५ ॥ १२
देवतात्वान्मेधपतिः १३
बहुष्वैकयस्य नोह्यता । १४
देवताभेदे ऊहः स्यात् १५

## इति नवमाध्यायस्य तृतीयः पादः ।

समासोहश्च वंक्रिषु ॥ १६६ ॥ १
चतुस्त्रि(२)शद्गणश्वे २
समासोऽपि विकल्पतः । ३

---

(१) अथ सिद्धान्तो वार्तिके प्रदर्शितो न त्वन्यत्र ।
(२) चतुस्त्रिंशद्गतिति पु० पा० ।

अग्नि(१)गौ च वपोरु*कम ४
प्रशंसा च प्रशस्तता ॥ १६७ ॥ ५
श्येनादौ चापि साकल्यम ६
ज्योतिष्मत्यग्निसंस्क्रिया । ७
नेष्टिर्गतश्रीधार्ये ऽग्नौ ८
नेष्टिर्वाचा(२)दिर्मन्त्रिका ॥ १६८ ॥ ९
पयः प्रदेयं नादित्ये १०
ऽभ्युदयेष्टौ प्रदेयता । ११
पशुकामेष्टौ तु नैवम १२
ग्रहेषु श्रप(३)णं तथा ॥ १६९ ॥ १३
यागः परस्वत्वंशाने १४
आज्यशेषवचस्यपि । १५

## इति नवमाध्यायस्य चतुर्थपादः ।

पादाधिकरणानां सङ्ख्या

२७ । ३१ । १५ । १५—

अध्यायाधिककरणसङ्ख्या ८८*

सर्वसङ्ख्यैक्यं ६७८ ।

## अथ दशमाध्यायः ।

१ लुप्तार्थबाधो विकृतौ १
२ कृष्णलेष्ववघाताग‍ः ॥ १७० ॥ २
३ उरुक्रमस्तु नावाह्यः ३
सोमेष्ट्यारम्भवारणम । ४
राजसूयेष्टिष्वप्येवम ५

---

(१) अधिगौ वपयोरुकर्मिति पु॰ पा॰ .

* वपा उरुकर्मिति छेदः ।

(२) वाचाशब्द आदिर्यस्मिन् मन्त्रे इति बहुव्रीहिगर्भो बहुव्रीहिः ।

(३) श्रवणे इति पु॰ पा॰ ।

† बाध इति शेषः तेन श्रपणं भवतीति फलितम् ।

* अधिकरणरत्नमालानुसारेणाऽध्यायाधिकरणसङ्ख्या ६७ ।

आरम्भेष्टिर्न चात्मनि ॥ १७१ ॥ ६
यूपाहुतिर्न साद्यस्के ७
तत्र स्थाण्वाहुतिर्न च। ८
स्वाहा†कारः सन्निपाती ९
नाज्यभागो ऽग्निदेवतः ॥ १७२ ॥ १०
नैवं पशुपुरोडाशः ११
सौर्ये चर्वारहोदनः। १२
सौर्ये बाधः कपालानाम् १३
पेषणादि च बाध्यते ॥ १७३ ॥ १४

## इति दशमाध्यायस्य प्रथमः पादः।

पाकः स्यात्कृष्णलचरौ १
नोपस्तराभिघारणे। २
भक्षस्तु तत्र स्यादेवै ३
कर्थ्यति तु सहत्वगीः ॥ १७४ ॥ ४
भक्षाः(१)सर्वे ब्रह्मणः स्युः ५
स्वकालास्ते तु सम्मताः। ६
व्यादेशो न चतुर्धाऽत्रा(२) ७
नत्यर्था दक्षिणर्त्विजाम् ॥ १७५ ॥ ८
भक्षास्तु प्रतिपत्त्यर्थाः ९
सत्रे वरणबाधनम्। १०
दक्षिणायाश्च बाधो ऽत्रो ११
दवसाने यजेः फलम् ॥ १७६ ॥ १२
तत्राधिकारः प्रत्येकम् १३
चेत्सहत्वं तदर्त्विजः। १४
ऋत्विजो नैव कामेष्टौ १५
द्वेष्य ऋत्विङ्न ना मतः। १६
सत्रे मृतो नाधिकारी १७
१ तथा(३)न्वे ऽपि न दीक्षितः। १८

† स्वाहाकारः – उत्तम. प्रयाज.।
(१) कपालचरावित्ति ग्रंथ.।
(२) चर्वेति पूर्वान्वयि, चानत्यर्थेति उत्तरान्वयि।
(३) क्रत्वाभिचला।

२ जपश्चावपनं बाध्यम् १९
शुक्लान्वारम्भणादि**न ॥ १७८ ॥ २०
गुणकामास्तु बाध्याः स्युः २१
सूक्तवाकफलानि च । २२
बाध्याः स्युर्होतृकामाश्च २३
सर्वस्वा(१)रः समाप्यते ॥ १७९ ॥ २४
मृते ऽस्थियज्ञवत्कर्म २५
युराशी(२)स्त्वत्र जीवति । २६
सत्रे दानमदृष्टार्थम् २७
निर्वापो निर्गुणे ऽपि च ॥ १८० ॥ २८
मुष्टेर्लोपो न सङ्ख्याया २९
धेन्वादावजबाधनम् । ३०
श्वेतादौ नाजबाधः स्यात् ३१
अत्रैहा अपि तण्डुलाः ॥ १८१ ॥ ३२
लुप्तार्थं न खले वाल्याम् ३३
अलुप्तार्थे भवेदिह(३)। ३४
पेषणं धर्मवन्मन्थे ३५

## इति दशमाध्यायस्य द्वितीयः पादः।

पश्वादौ चोदको ऽस्ति च ॥ १८२ ॥ १
पराघारे मन्त्रविधिः २
नोत्करादौ क्रियाविधिः। ३
दीक्षामन्त्रेष्वबाधो ऽग्नौ ४
पुनर्निष्कृत(४)एव च ॥ १८३ ॥ ५
वासोवत्से प्राप्तबाधः ६
तत्रान्वाहार्यधर्मता। ७
वत्से पाकस्य बाधः स्यात् ८
पाकबाधश्च वाससि ॥ १८४ ॥ ९

---

** बाध्यमिति शेषः। (१) सर्वसार इति पु० पा०।

(२) आयुराशीरिति छेदः। (३) खलेवाल्याम्।

(४) पुनर्निष्कृत एव दक्षिणा नान्या।

† इदं नाधिकरणान्तरम्।

उभयोरभिघारस्य(१) १०
स्याद्द्वादशशतं गवाम् । ११
विभज्य दक्षिणा देया १२
स विभागो ऽसमो मतः ॥ १८५ ॥ १३
धेनुर्गवां बाधिका स्यात् १४
एका पंचेति धेनुवत् । १५
त्रिवत्सा प्ये‌ऽव मेव स्यात् १६
प्राकाशौ भागबाधकौ ॥ १८६ ॥ १७
श्यावाश्वे कृत्स्नबाधः स्यात् १८
स(२)सोमचमसे ऽपि च । १९
वा(३)क्यैक्ये भागबाधः स्यात् २०
यजुर्युक्ते मतो न सः(४) ॥ १८७ ॥ २१

## इति दशमाध्यायस्य तृतीयः पादः ।

उपहोमै नं नारिष्टा(५) १
१ बाध्या(६)स्त्विह शरैः कुशाः । २
२ रथ†घोषान्मन्त्रदर्भौ ३
शुक्रादेर्न ग्रहान्तरम्(७) ॥ १८८ ॥ ४
प्राजापत्यैः क्रतुपशुः ५
चानुयाजास्तथा ऽऽमनैः । ६
पत्नीभिर्गानकर्त्तर्त्विक् ७
नवनीतं च गुग्गुलोः ॥ १८९ ॥ ८
बाध्यं न वा सस्तार्येण ९
प्राकृती वैकृतस्तुतेः । १०
कौत्सेन प्राकृतं बाध्यम् ११

---

(१) बाध इतिसम्बध्यते ।

(२) तच्छब्देन बाधःऽपरामृश्यते ।

(३) न्यायमालायामिदं पृथङ्नास्ति ।

(४) सः—भागबाधः । (५) बाध्या इत्यपकृष्यते ।

(६) यद्वेत्यादिना अधिकरणान्तरत्वमस्य प्रदर्शितं शास्त्रदीपिकायाम् ।

† एवं वेत्यादिना वर्णकान्तरमारचितम् ।

(७) बाध्यमिति सम्बध्यते ।

तत्रापि समसङ्ख्यकम् ॥ १९० ॥ १२
स्तोमवृद्धौ न बाधः स्यात् १३
बाधाबाधौ न सर्वगौ । १४
विधिशब्दो देवतायाम् १५
विकृतावपि तत्तथा ॥ १९१ ॥ १६
सगुणायां गुणस्यापि १७
वृ*धन्वान्देवता न च । १८
उ†स्त्रित्येवानुबन्धे वा १९
ऽवभृथे स्विष्टकृद्गुणः ॥ १९२ ॥ २०
तल्लोपस्तु प्रयोगे(१)चा २१
नुयाजोऽन्त्यस्तु संस्क्रिया । २२
याज्यानुवाक्या चैवं(२)स्यात् २३
मनोताग्नेरनूहनम् ॥ १९३ ॥ २४
कण्वादिसाम्नि स्वा योनिः २५
तत्र स्व एव चोत्तरे २६
मोहः स्तोत्रे च शस्त्रे वा २७
ऽऽज्यऽ‡पान्त्स्यात्पृषदाज्यके ॥ १९४ ॥ २८

## इति दशमाध्यायस्य चतुर्थः पादः ।

लोपोन्त्यस्यैव विकृतौ १
एकत्रिकतृचे ऽन्त्ययोः । २
एकस्यामृचि धूर्गानम् ३
दशाहो मध्यगो गणे ॥ १९५ ॥ ४
विकल्पो ऽपूर्वसङ्ख्यासु ५
स्तोमे सामागमो ऽधिके । ६
पवमाने त्वाद्यऋचा ७
सामिधेनीषु चागमः ॥ १९६ ॥ ८
षोडशी प्रकृतावेव ९

---

* वृषन्वानिति पु० पा० । † उत्सीत्येवेति पु० पा० ।

( १ ) अग्नीषोमीये । ( २ ) एव संस्कारकर्मस्यात् ।

‡ आज्यायान्त्स्यात्पृषदाज्यके इति पु० पा० ।

| | | |
|---|---|---|
| | तृतीयसवने स(१)च । | १० |
| | सचाग्रयणतो ग्राह्यः | ११ |
| | स च स स्तुतशस्त्रकः ॥ १९७ ॥ | १२ |
| १ | द्विरात्रे ऽङ्गिरसां नित्यः | १३ |
| २ | सोऽन्येष्वपि मतान्तरे । | १४ |
| | चतुर्थवीप्सा ना(२)हीने | १५ |
| १ | विषुवाग्रयणाग्रता ॥ १९८ ॥ | १६ |
| २ | जगत्सामा च विषुवान् | १७ |
| | द्वयसामा स्वधर्मयुक् । | १८ |
| | स्वमैन्द्रवायवस्थानम् | १९ |
| | तथा कामे तदग्रता ॥ १९९ ॥ | २० |
| | काम्या शुक्राग्रतायां न | २१ |
| | सा तु धाराग्रहाश्रया । | २२ |
| | सादनं चापि तत्रैव | २३ |
| | प्रदानं तत्र नैव हि ॥ २०० ॥ | २४ |
| | नित्यं ऽयनीका शुक्राग्राः | २५ |
| | अनङ्गं व्यूढ इष्यते । | २६ |
| | ऽयनीकावृत्तिः स्वस्थानात् | २७ |
| | छन्दोऽन्यस्थानता मतौ ॥ २०१ ॥ | २८ |

## इति दशमाध्यायस्य पञ्चमः पादः ।

| | |
|---|---|
| तृचे स्तोत्राङ्गसामानि | १ |
| कालार्थः स्वर्हगन्वयः । | २ |
| पृष्ठ्ये साम्नोर्विभज्योक्तिः | ३ |
| तथैकादशिनेष्वपि ॥ २०२ ॥ | ४ |
| विश्वजित्सर्वपृष्ठे सा | ५ |
| वैरूप्यं पृष्ठ एव च । | ६ |
| त्रिवृच्छन्दो नवर्चार्थः | ७ |
| पृष्ठे संसर्गे उभे ॥ २०३ ॥ | ८ |

(१) अनयोः शास्त्रदीपिकायां वैपरीत्यम् ।

(२) वीप्सान्याहीने इति पु० पा० ।

| | | |
|---|---|---|
| | षडहान्ते मध्वशनम | ९ |
| | सकृत्तत्षडहे पुनः। | १० |
| | पुनः पुनर्व्यवाये तु | ११ |
| | सत्रे मध्वशनं भवेत् ॥ २०४ ॥ | १२ |
| | नाहरन्यम्मानसं स्याद् | १३ |
| | बहूनां सत्रकर्तृता। | १४ |
| | बाधस्तत्र त्विडामिष्टः | १५ |
| १ | सत्रलक्षणमेव च ॥ २०५ ॥ | १६ |
| २ | अहीनलक्षणं चैका | १७ |
| | पौण्डरीकस्य दक्षिणा। | १८ |
| | विभज्य प्रत्यहं नेया | १९ |
| | यावत्सङ्ख्यं मनोर्ऋचः ॥ २०६ ॥ | २० |
| | मानाहृती वाससा स्तो | २१ |
| | ऽहर्गणेवाससो भिदा। | २२ |
| | काले सात्वाहृतेः* कार्या | २३ |

इति दशमाध्यायस्य षष्ठः पादः।

| | |
|---|---|
| हृदयादिपशौ हविः ॥ २०७ ॥ | १ |
| तत्रैकादशसङ्ख्यं स्यात् | २ |
| तदन्यैः स्विष्टकृत्त्रिभिः। | ३ |
| अध्यू(१)ध्न्येडाभक्षबाधो | ४ |
| वनिष्ठुरपि बाधकः ॥ २०८ ॥ | ५ |
| इडाभक्षः प्रशास्तुः स्यात् | ६ |
| भागस्तस्यैक एव च। | ७ |
| प्रतिप्रस्थातुर्नो भक्षो | ८ |
| ऽपूर्वत्वं प्राकृतश्रुतौ ॥ २०९ ॥ | ९ |
| तत्रापि यावदुक्तं स्यात् | १० |
| स्विष्टकृच्छेषकार्यहृत्। | ११ |
| शंयुविडान्तादिर्नित्यं स्यात् | १२ |

---

* आहृते. कालि इत्यन्वय।

(१) अध्यूध्नीडाभक्षणे बाध इति पु० पा०।

सान्ततापूर्वतो भवेत् ॥ २१० ॥ १३
स्युस्त्वपूर्वा उपसदो १४
ऽवभृथश्च तथैव नः। १५
वैकल्पिकैकनियमः १६
प्रत्याम्नानाच्च बाधनम् ॥ २११ ॥ १७
समुच्चयो यू(१)पयोर्न १८
शुक्लव्रीह्यविकल्पनम्। १९
पश्वावर्त्तः पशुः सर्वो २०

## इति दशमाध्यायस्य सप्तमः पादः।

१ नार्षेय पर्युदासता ॥ २१२ ॥ १
२ न तौ पशाविति न सा २
न सौम्य* इति नु स्तुतिः। ३
विकल्पः षोडशिन्युक्तः ४
जर्त्तिलादेर्विधिर्न च ॥ २१३ ॥ ५
होमाभिघारणं नित्यं† ६
अग्न्याधेये च सामायत्। ७
२ दीक्षिते पर्युदासाः(२) स्युः ८
२ निषेधा इति के(३)चन ॥ २१४ ॥ ९
बाधो विशेषात्सामा(४)न्य १०
स्योपसंहारवर्णनं। ११
स्वाहाकारः सर्वहोमे १२
ऽग्न्यतिग्राह्यातिदेशनम् ॥ २१५ ॥ १३
हविश्चतुरवद्ये स्त्रो १४
पांशुयाजोऽपि तद्वत्। १५
प्रागेव सोमाग्नैन्द्राग्नौ १६

---

(१) यूपयोर्नार्थ इति पु॰ पा॰।

* सौमं इति पाठो दृश्यते शास्त्रदीपिकायाम्।

† नित्यं इति वचनव्यत्ययेन सम्बद्ध्यते नित्यमित्यर्थः।

(२) भाष्यमतमिदम्।

(३) वार्तिककाराः।

(४) सामान्यस्य विशेषादित्युभयत्रान्वयिः

| | | |
|---|---|---|
| | ध्रौवे चोपांशुयाजके ॥ २१६ ॥ | १७ |
| | देवता नियता तत्र | १८ |
| | पौर्णमास्यां तथैव च । | १९ |
| | आग्नेयमात्रे ऽपि स च | २० |

इति दशमाध्यायस्याष्टमः पादः ।

पादाधिकरणानां सङ्ख्या

१४।३५।२१।२८।२८।२३।२०।२०

अध्यायाधिकरणसङ्ख्या १८८†

सर्वसङ्ख्यैक्यं ८६७

## अथैकादशोऽध्यायः ।

| | | |
|---|---|---|
| | प्रकृतीष्टौ फलं सह ॥ २१७ ॥ | १ |
| १ | एकोपकाराण्यङ्गानि | २ |
| २ | तेषां*च स्यात्समुच्चयः । | ३ |
| | काम्याभ्यासः प्रतिफलम् | ४ |
| १ | अवघातः सकृन्न च ॥ २१८ ॥ | ५ |
| २ | सर्वौषधे(१)तु स सकृत् | ६ |
| | नाङ्गावृत्त्या फलं बहु । | ७ |
| | कपालेषु त्रित्वं स्यात् | ८ |
| | उत्तरादोहनेन तत् ॥ २१९ ॥ | ९ |
| | कालाद्यैक्ये ऽङ्गतन्त्रं च | १० |
| | न्तः(२)सौम्याग्नेययोर्न तत् । | ११ |

इति एकादशाध्यायस्य प्रथमः पादः ।

| | | |
|---|---|---|
| १ | कालाद्यैक्यं प्राकृतेष्टेः | १ |
| २ | अङ्गेषु च तदङ्गिभिः ॥ २२० ॥ | २ |
| | प्रतिप्रवर्कं त्वङ्गभेदो | ३ |

* वृत्तिकारमते ऽधिकरणान्तरं न भाष्यमते ।

(१) शास्त्रदीपिकायां नाधिकरणान्तरमिदम् ।

(२) अत्र सौम्यी यथोराग्नेयोस्तन्त्र नेत्यर्थ ।

† अधिकरणरत्नमालानुसारेणाऽध्यायाधिकरणसङ्ख्या १७८ ।

ऽध्वरकल्पापि तद्विधा । ४
वसाहोमैक्यं पशुषु ५
कालभेदे भिदा मता ॥ २२१ ॥ ६
अन्ते यूपाहुतिस्तद्व(१)त् ७
साङ्गो ऽप्स्ववभृथो मतः । ८
विहारयो रङ्गावृत्तिः ९
कर्तृतन्त्रं तयोर्मतम् ॥ २२२ ॥ १०
आपराग्निकभेदो ऽत्र ११
ब्रह्मसाग्नि न कर्मभित् । १२
स्यात्पञ्चशारदीये सा(२) १३
सह सोमक्रयेऽङ्गभित् ॥ २२३ ॥ १४
तुषयागो ऽर्थकर्मेत्थम् १५
निष्कासे तु न निर्वपिः । १६

## इति एकादशाध्यायस्य द्वितीयः पादः ।

अङ्गाङ्गिनोः कालभेदो १
ऽङ्गत्वे ऽप्याधानतन्त्रता ॥ २२४ ॥ २
सोमाङ्गपशुयूपैक्यम् ३
तत्र संस्कारतन्त्रता । ४
यूपैक्ये स्वरुतन्त्रत्वम् ५
विषाणाया अह*र्गणे ॥ २२५ ॥ ६
नानाबीजे(३)वाग्विसर्गो ७
पशुकाले स(४)नार्त्विचत् । ८
साङ्गा(५)न्ते ऽग्निविमोको ह ९
र्गणेष्वेको(६)पसत्सु या ॥ २२६ ॥ १०

(१) तन्त्रेणेत्यर्थः ।

(२) सा – कर्मभिदा ।

* तन्त्रत्वमिति सम्बध्यते ।

(३) अत्राऽपि तत्सम्बध्यते ।

(४) स – वाग्विसर्गः ।

(५) एतद्वार्तिकमतम् । भाष्यमते तु प्रधानमात्रान्ते विमोकः ।

(६) उपसत्सु या सुब्रह्मण्या सा अहर्गणेषु एकतन्त्रेत्यर्थः ।

सुब्रह्मण्या(१)न चान्यैवम् ११
ऋत्विग्देशा(२)भिदापि च । १२
१ आन्तातपात्रधृतिस्त्विष्टा १३
२ पवमानेष्टितस्तु सा ॥ २२७ ॥ १४
कृत्स्नसोमोर्ध्वाः पशवः १५
सूक्तवाकेन्द्र उत्कर्षिः । १६

## इति एकादशाध्यायस्य तृतीयः पादः ।

कर्तुर्दक्षिणयोर्भेदः १
राजसूये तु तन्त्रता ॥ २२८ ॥ २
नावेष्टावेकतन्त्रत्वम् ३
न सेष्टिषु गुणात्फले । ४
द्वादशाहः षट्त्र्य(३)हः स्यात् ५
सुत्याकालाङ्गभिस्त्विह ॥ २२९ ॥ ६
सुब्रह्मण्याहः शब्दतन्त्रम् ७
कुम्भ्यादेश्च पशुष्वद(४)म् । ८
१ नानादेवेष्वप्येवं स्यात् ९
२ वसा(५)भेदे ऽप्यभिन्नता ॥ २३० ॥ १०
जातिभेदपशोस्त(६)द्भित् ११
अश्वेष्टिषु कपालभित् । १२
अवघाते सकृन्मन्त्रः १३
नानाबीजेषु तद्भिदा ॥ २३१ ॥ १४
प्रतिमुष्टि स निर्वापे १५
वेदस्त्रिः प्रोक्षणे सकृत् । १६
स*कृत्कण्डूवां सकृन्मन्त्रः १७

---

(१) अन्या सुत्याकालीना सुब्रह्मण्या नैवम् एका नेत्यर्थः ।
(२) ऋत्विग्देशानां भेदो ऽभेदश्च ऐच्छिक इत्यर्थः ।
(३) षट्त्र्यह. २६ ।
(४) तन्त्रम् ।
(५) अधिकरणान्तरं नेदं शास्त्रदीपिकायाम् ।
(६) तन्त्रभेदः ।
* सकृत्कर्म सकृन्मन्त्र इति पु० पा० ।

स्वप्नादावेवमेव च ॥ २३२ ॥ १८
प्रयाणाङ्गं मनुस्तद्वत् १९
तन्त्रं नोपरवेषु सः । २०
कालभेदे ऽग्निगावेवम् २१

## इति एकादशाध्यायस्य चतुर्थः पादः ।

पादाधिकरणानां सङ्ख्या

११ । १६ । १६ । २१

अध्यायाधिकरणसङ्ख्या ६४ *

सर्वसङ्ख्यैक्यं ९३१ ।

## अथ द्वादशाध्यायः ।

१ चित्रायां भि(१)न्नकर्मता ॥ २३३ ॥ १
२ पश्वङ्गानिप्रसज्यन्त २
पुरोडाशे त्वसन्नतु । ३
दैक्षादौ सोमवेदिश्च ४
पात्राणि प्रसजन्ति न ॥ २३४ ॥ ५
शामित्रो न पुरोडाशे ६
नाम्नापाको ऽपराग्निगः । ७
हविर्धानं न निर्वापे ८
दीक्षार्थाज्जागरः पृथक् ॥ २३५ ॥ ९
विहारयोर्न मन्त्रैक्यम् १०
सोमे ऽग्न्यन्वाहिति र्न च । ११
तथा व्रतोपायनं च १२
दीक्षोर्ध्वान्वाहिति र्न च ॥ २३६ ॥ १३
पत्नीसन्नहनं नै(२)व १४

---

(१) समानतन्त्रत्वं नोदाहृतं भाष्यकारेण चित्रायागे एककर्मत्वा-त्तदनुपपत्तिमाशङ्क्य भिन्नकर्मत्वं साधितम् ।

* अधिकरणरत्नमालाऽनुसारेणाऽध्यायाधिकरणसङ्ख्या ६४ ।

(२) सोमे इत्यनुवर्तते ।

सोमे नैवैष्टिकं व्रतम्। १५
य(१)ष्टभक्षाः पृथक्तु स्युः १६
सोमाङ्गे दक्षिणा न च ॥ २३७ ॥ १७

ऋत्विक्भक्षास्त्वैष्टिकाः स्युः १८
होतुर्वरणमेव च। १९
बर्हिरैक्ये(२)तदङ्गं न २०
देशभेदे भिदा मनोः ॥ २३८ ॥ २१
नाहह(३)ति मनू नैवम् २२

इति द्वादशाध्यायस्य प्रथमः पादः।

त्रेता(४)पाकाद्यसाधनम्। १
नित्यः पशुपरोडाशः २
हविष्कृच्चेत्पशौ सकृत् ॥ २३९ ॥ ३
सौम्यादावपि सा नेव ४
निशोष्टिश्च प्रसङ्गिनो। ५
आरम्भणीया विकृतौ ६
भूयांसः स्युः सधर्मकाः ॥ २४० ॥ ७
मुख्यं स्वधर्मकं साम्ये ८
ङ्गाङ्गिनोरङ्गि तादृशम्। ९
परिधिर्द्वयधर्मा स्यात् १०
विरोधे यौप्यबाधनम् ॥ २४१ ॥ ११
सवने पशुतन्त्रित्वम् १२
विकृतेः प्रकृतिं प्रति। १३
बर्हिः सूनं त्वाग्रयणे १४
सर्वेषां तन्त्रितेह च ॥ २४२ ॥ १५

इति द्वादशाध्यायस्य द्वितीयः पादः।

---

(१) न्यष्ट इति पु० पा०।

(२) पृथगित्यनुवर्तते। बर्हिरैक्ये प्रतिकर्म बर्हिरङ्गं प्रोक्षणादिकं पृथक् न कर्तव्यमित्यर्थः।

(३) संवहन हरणमन्त्रौ।

(४) त्रे ता—अग्नित्रयम्। विता इति० पु० पा०।

| | |
|---|---|
| वत्सत्वचाहता बाधः | १ |
| देवसूषु प्रसङ्गिता । | २ |
| सर्वमूर्ध्वादि चाघारे | ३ |
| यवव्रीहिविकल्पनम् ॥ २४३ ॥ | ४ |
| दोषे प्रायश्चित्तयोश्च | ५ |
| दोषाभावे समुच्चयः । | ६ |
| कर्मण्यधर्मका मन्त्रा | ७ |
| ब्राह्मणस्वरतो न ते ॥ २४४ ॥ | ८ |
| तत्रोत्पन्नास्तत्स्वरेण | ९ |
| मन्त्रान्ते कर्म चारभेत् । | १० |
| सन्ततां च वसोर्धाराम् | ११ |
| सन्तताघारकर्म च ॥ २४५ ॥ | १२ |
| विकल्पाः करणामन्त्राः | १३ |
| सङ्ख्यायुक्तसमुच्चयः । | १४ |
| ब्राह्मणैर्विहितेष्वेव(१)म | १५ |
| क्रिय(२)माणानुवादिषु ॥ २४६ ॥ | १६ |

## इति द्वादशाध्यायस्य तृतीयः पादः ।

| | |
|---|---|
| जयाशीरादिषु च सो(३) | १ |
| ऽनुवाक्यायाज्ययोश्च सः । | २ |
| क्रयणेषु च सन्याय्यः | ३ |
| पशुसङ्गुदेषु च ॥ २४७ ॥ | ४ |
| ना(४)ग्न्याधेये दक्षिणासु | ५ |
| जाघनीषु समुच्च(५)यः । | ३ |
| अग्नावुख्यः काम्यबाध्यः | ७ |
| काम्यो नाहवनीय(६)कः ॥ २४८ ॥ | ८ |

---

(१) विकल्पः । विहितेष्वेव इति पु॰ पा॰ ।

(२) समुच्चयः ।

(३) सः — समुच्चय ।

(४) समुच्चयो न ।

(५) नैत्यनुवर्तते ।

(६) नीयके इति पु॰ पा॰ ।

| | | |
|---|---|---|
| | नास्याधानादि कर्म स्यात् | ९ |
| | गतश्रीधारणं न च । | १० |
| | यष्टैकस्तुपरार्थानि | ११ |
| | सत्रादौ स च कश्चन ॥ २४९ ॥ | १२ |
| | सत्रे गृहपतिः स स्यात् | १३ |
| १ | स्वाम्यर्थे सर्वकर्तृता । | १४ |
| २ | आर्त्विज्यं बलिसंस्कारात् | १५ |
| | विप्राणामेव तच्च नः ॥ २५० ॥ | १६ |

इति द्वादशाध्यायस्य चतुर्थः पादः ।

पादाधिकरणानां सङ्ख्या

२२।१५।१६।१६

अध्यायाधिकरणसङ्ख्या ६९*

सर्वसङ्ख्यैक्यं १०००

इति द्वादशाध्यायः ।

आचार्यैरधिकरणान्युक्तानि सहस्रसङ्ख्यानि ।
तत्सिद्धान्तान्पादैः तत्सङ्ख्यैर्भट्टशंकरोऽबध्नात् ॥ १ ॥
इदं भवतु मीमांसासारसंग्रहपञ्जरम् ।
शिवयोः पादपद्मानां पूजार्थं लिखितं मया ॥ २ ॥

इति शङ्करभट्टकृतमीमांसासारसङ्ग्रहः समाप्तः ।

श्रीगुरुर्जयति ।



* अधिकरणरत्नमालाऽनुसारिणाध्यायाधिकरणसङ्ख्या ७० ।

मीमांसादर्शनम् ।

प्रकरणपञ्चिका ।

श्रीमच्छालिकनाथमिश्रविरचिता ।

# श्रीगणेशायनमः ।

स्वाध्यायविधिवाक्यार्थविचारे प्रयतामहे ।
प्रभाकरगुरोर्दृष्ट्या मीमांसारम्भसिद्धये ॥ १ ॥

अत्र केचिदाचक्षते, न मीमांसाशास्त्रमारम्भणीयमिति, तद्धि वेदवाक्यार्थविचारोपायभूतन्यायनिबन्धनं, नच वेदवाक्यार्थो विचार्यो विचारस्य विषयभूतोऽस्ति, नाप्यसौ विचार्य निर्णीतः प्रयोजनमवकल्पतेऽपुरुषार्थत्वात्, पुरुषार्थत्वे हि तस्य नोदनैव प्रमाणं स्यात् । नचाविवक्षितार्था सा प्रमाणं भवितुमर्हति । ननु शब्दानामौत्पत्तिकत्वादर्थपरत्वस्य नाऽविवक्षितार्थता युक्ता ? सत्यमेवं वेदेनैव त्वन्यपरतामवगमयता ऽविवक्षितार्थता ऽऽपाद्यमाना न शक्या वारयितुं, तथाहि, स्वाध्यायोऽध्येतव्य इति परप्रेरणात्मकविध्यवरुद्धा भावना तव्यप्रत्ययवाच्या प्रतीयते, साच स्वभावतो भाव्यं करणमितिकर्तव्यताञ्चापेक्षते, तत्र न तावदध्ययनमेव समानपदोपात्तं भाव्यतया सम्बन्धमर्हति, अपुरुषार्थत्वात्, तस्मिन्हि भाव्यतया स्वीक्रियमाणे पुरुषप्रवृत्त्यनुपपत्तेः, परप्रेरणात्मकविधिव्यापारभङ्गप्रसङ्गात् । नाप्येकवाक्यतया समभिव्याह्रियमाणस्य स्वाध्यायस्य भाव्यतया सम्बन्धोऽवकल्पते, विध्यानर्थक्य

प्रसङ्गात्, अन्तरेणापि हि विधिं प्रतीयतएवाध्ययनेन स्वाध्यायोऽवाप्यतइति । नच व्रीहीनवहन्तीतिवन्नियमार्थो विधिरिति शक्यते वक्तुम्, अक्रत्वर्थत्वादध्ययनस्य; न खल्वयनस्य क्रत्वर्थत्वे किंचन प्रमाणमस्ति, अक्रत्वर्थश्च न नियमस्य विषयः । अवघातादयो हि क्रतावेव नियम्यन्ते न तण्डुलादिस्वरूपे । अवघातेनैव सम्पादितैस्तन्दुलैः क्रतुफलभावनासिद्धिरिति । प्रमाणान्तरस्याविषयत्वात्तेनैव सिद्धिरिति न किंचिद्विरुद्धं । स्वाध्यायस्वरूपग्रहणं त्वध्ययनेनैव सिध्यतीति नियम्यमानं मानान्तरविरुद्धं स्वयमनधीयमानस्यापि परपुरुषाधीयमानस्याध्यायग्रहणदर्शनात् । नचाध्ययनस्वीकृतेनैव स्वाध्यायेन क्रतुफलभावनासिद्धिरिति, अक्रत्वर्थतया क्रतुसंस्पर्शाभावेन नियमानुपपत्तेरिति ।

एतेनैवार्थावबोधस्यापि भाव्यतया सम्बन्धो निरस्तो वेदितव्यः । तथा हि, यद्यप्यधीतात्स्वाध्यायात्फलवत्कर्मविबोधो दृश्यतइति तस्यैव भाव्यता ऽवसीयते तथापि विनापि विधिनाऽन्वयव्यतिरेकाभ्यामध्ययनस्यार्थावबोधसाधनत्वावगमाद्विधिरनर्थक एव । न चाध्ययनेनैवार्थावबोधो भावयितव्य इति नियमविधेरर्थवत्ता, प्रकारान्तरेणापि तत्संभवान्नियमानुपपत्तेः । नचाध्ययनेनैवार्थमवबुध्यानुतिष्ठतां क्रतुफलभावनासिद्धिरिति नियमः संभवति, अक्रत्वर्थत्वादध्ययनस्य । तस्माद्विश्वजिन्न्यायेन स्वर्ग एव भाव्यतया कल्पयितव्ये प्राप्ते फलमात्रे यो निर्देशादित्यार्थवादिकमधुघृतकुल्यादि—तृप्तपित्रादिप्रसादलभ्यसर्वकामफलावाप्तिरेव भाव्यतया ऽवसीयते । नन्वाद्याध्ययने न किंचिदार्थवादिकं फलं श्रूयते, तत्रैषामर्थवादानामश्रवणात्, धारणजपयज्ञविध्यर्थवादा ह्येते,

तदाहुर्वार्तिककारमिश्राः ।

"आद्ये त्वध्ययने नैव काचिदस्ति फलश्रुतिः ।
धारणे जपयज्ञे च या सा ऽप्येवं निवारिता" ॥

इति । सत्यमेवं, तथापि तेषामतिदेशतोऽपि लब्धैर्युक्तैव तदीयफलस्य भाव्यता, तथाहि लिङादियुक्तेषु वाक्येषु द्वे भावनेऽवगम्येते शब्दभावनाऽर्थभावना चेति । तत्र शब्दभावना प्रेरणात्मिका तस्याः पुरुषप्रवृत्तिर्भाव्या, तया च प्रेरणाया सह यो लिङादीनां वाच्यवाचकभावः सम्बन्धः स तत्र योग्यतया करणं, तदाहुर्वार्तिककार मिश्राः; "लिङादयो हि प्रेरणां कुर्वन्त्यभिदधति चेति" प्रवर्त्तरुच्युत्पादनयोग्यतया चार्थवादिकी स्तुतिरितिकर्तव्यता । तदेवमध्ययनविधौ साक्षादश्रुतार्थवादके शब्दभावनायामितिकर्तव्यताभूतार्थवादकाङ्क्षिण्यां जपयज्ञाऽध्ययनातिदेशेनाऽर्थवादाः स्वीक्रियन्ते । तदाहुर्वार्तिककार मिश्राः "अनुषङ्गानुमानाद्यैर्लभ्यन्ते ऽन्ये ऽतिदेशत इति" ते चातिदिष्टा अर्थवादा अर्थभावनायां फलं समर्पयन्ति रात्रिसत्रवत्. एवमार्थवादिके फले भाव्यतया ऽवगते ऽध्ययनं समानपदोपात्तं करणाकाङ्क्षापरिपूरकत्वेन समर्प्यते । एवञ्च यदेकस्मादपूर्वं तदेतरत्तदर्थमितिन्यायेन स्वाध्यायशब्दवाच्योऽक्षरराशिरप्यध्ययननिर्वृत्त्यर्थ एवावगम्यते । एवञ्चान्यपरत्वादक्षराणां तेभ्योऽर्थ प्रतिपत्तिरेवानुपपन्ना, व्युत्पत्तिविरहात्. वृद्धव्यवहारे ह्यनन्यपराण्येवाक्षराण्यर्थावबोधकतया व्युत्पन्नानि, व्युत्पत्त्यपेक्षश्च शब्दो ऽर्थावबोधकः । यः पुनरन्यपरेभ्यो ऽप्यक्षरेभ्यो ऽर्थावगमः स सामान्यतोदृष्टनिबन्धनान्यपरत्वभ्रान्त्या भ्रान्तिरेवेति मन्तव्यम् । अप्रतीयमानश्चार्थो न विचारस्य विषयः नापि प्रयोजनमिति विचारस्तावन्नारब्धव्यः, तदनारम्भे च तदुपायभूतन्यायपरिज्ञानमप्यनुपयोगि तदनुपयोगे च तन्निब-

न्धनं मीमांसाशास्त्रमनारम्भणीयमिति पूर्वः पक्षः ॥

राद्धान्तस्तु। स्वाध्यायो ऽध्येतव्य इति स्वाध्यायस्य कर्मत्वावगमात्स एव भाव्यतया ऽवसीयते, यद्यपि नित्यत्वान्निर्वर्त्यकर्मता नास्ति स्वाध्यायस्य विकार्यकर्मता वा, अध्ययनेन तस्य विकारानुपपत्तेः तथापि प्राप्यतया तस्य कर्मता नानुपपन्ना, अतएव प्राप्यकर्मोदाहरणं वृत्तिकारस्य वेदाध्ययनं, यच्च कर्म तदर्थैव क्रिया युक्ता, सो ऽयं श्रौतो विनियोगः, नच स्वाध्यायस्य सक्तुवच्छेषित्वमनुपपन्नं? फलवदर्थावबोधोपयोगित्वात्। यद्यपि चार्थविबोधोपयोगित्वमध्ययनात्प्राङ्नावगम्यते तथापि पश्चाद्भाव्यपि भवत्येव प्रयोजनं भाविनापि चोपयोगेन शेषित्वं नानुपपन्नम् अग्निवत्। उत्पन्नानां ह्यग्नीनां विनियोगादवगमो नावगतविनियोगानामुत्पत्तिः आहवनीयादिशब्दानामलौकिकार्थतया प्राग्व्युत्पत्त्यवगमादर्थानवगतेः होमादिषु विनियोगासंभवात्, तथा चोक्तम् "भूतभाव्युपयोगं हि द्रव्यं संस्कारमर्हति" ननु चार्थावबोधोपयोगितया संस्कारविधिरनर्थक एवेत्युक्तं? नानर्थको नियमार्थतया ऽर्थवत्त्वात्, ननु च नियमो न सम्भवति अक्रतुसंस्पर्शित्वादित्युक्तं, न, सम्भवति स्वाभाविकार्थपरत्वानुसारेण क्रत्वनुप्रवेशे तुल्यनाया एवोचितत्वात्, यदि खल्वध्ययनविधेः क्रत्वनुप्रवेशिता नाश्रीयते तदा शब्दानां वृद्धव्यवहारव्युत्पन्नानां स्वाभाविकार्थपरता हीयते, जहत्स्वार्थत्वं च न न्याय्यमिति क्रतुफलभावनानुप्रवेश्ये वाध्ययनसंस्कारो युक्तः, तत्र कर्मविधिष्वेव नियमवर्णना अध्ययनाविर्भावितैरेव कर्मविधिभिरर्थमवबुध्यानुतिष्ठतां क्रतुफलभावनासिद्धिरिति, अर्थवादेषु त्वध्ययनाविर्भावितार्थवादप्ररोचिताः क्रियमाणाः क्रतवः फलभावनाया अलमिति। मन्त्रेषु पुनरध्ययनपरिगृही-

तैरेव मन्त्रैः क्रतुषु स्मरणीयपदार्थस्मरणं फलभावनानुगुणमिति, अध्ययननियमाश्रितश्च कालनियमो व्रतादिनियमश्च ।

"श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि, ।
युक्तश्छंदांस्यधीयीत मासान्विप्रोऽर्धपञ्चमान् ॥
व्रतपूर्वं चरेद्वैक्षमुपनीतो द्विजोत्तमः ।
व्रतमध्यं तु राजन्यो वैश्यस्तु व्रतदुत्तरमि"ति ॥

एवञ्चान्यपरत्वादक्षराणां फलवत्कर्मावबोधोत्पत्तेर्विचारस्य विषयप्रयोजनलाभाच्छास्त्रस्यारम्भणीयत्वं विषयप्रयोजनलाभे च विचारस्याध्ययनानन्तरमुपनिपतितत्वाद् गुरुकुलस्थितेरर्थवत्त्वात्तन्निवृत्तिमध्ययनानन्तरप्राप्तां स्मरद्वेदमधीत्य स्नायादिति स्मृतिवचनमपन्यायमूलं दर्शयन्नर्थावबोधपरतया स्वाध्यायस्य विवक्षितार्थतां मन्यमानः सूत्रकारो विचारस्य विषयं प्रयोजनं चाह "अथातो धर्मजिज्ञासे"ति । एतच्च व्याख्यातम् ।

अथातो धर्मजिज्ञासासूत्रमाद्यमिदं कृतम्, ।
धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनमि"ति ।

तदयुक्तम् । न हि लिङादियुक्तवाक्येषु भावना भाव्यान्तरमपेक्षते अपूर्वस्य भाव्यस्य स्वशब्देनाभिहितत्वात्, लिङादयो हि भाव्यकोटिनिविष्टप्रधानभूतापूर्वोपसर्जनतापन्नामेव भावनामभिदधतीति विषयकरणीये निपुणतरमुपपादितम्, अतो न पूर्वपक्षे भाव्याकाङ्क्षायामार्थवादिकफलसम्बन्धः । नापि सिद्धान्ते स्वाध्यायस्य साध्यतयान्वयः कथं तर्हि विश्वजिदादिषु स्वर्गादिफलकल्पनं, यथा तत्तथा निशम्यतां, यदपूर्वं कार्यभूतं प्रतीयते तद्विषयत्वेन सम्बन्धकरणीभूतयागाद्यनुष्ठानाधीनात्मलाभं, नच विना कर्त्रा तदनुष्ठानोपपत्तिः ?

नचाधिकारं विना कर्तृत्वलाभः ? नच नियोज्यमन्तरेणाधिकारसिद्धिः ? न वा विशिष्टो नियोज्यो ऽवकल्पतइति विशेषणभावेन स्वर्गकामना परिकल्पते, स्वर्गकामना चेन्नियोज्यविशेषणं ततोऽग्निहोत्रादिवत् स्वर्गस्यापि नियोगतः सिद्धिरिति। भवत्वेवम् अत्रापि तर्हि नियोज्यविशेषणतयैवार्थवादिकं फलं रात्रिसत्रवत्सम्बध्यतां ? न। अन्यतोऽनुष्ठानसिद्धेः, कुतोऽन्यतः ? आचार्यकरणविधिप्रयुक्तेः, कः पुनराचार्यकरणविधिः ?

"उपनीय तु यः शिष्यं वेदमध्यापयेत् द्विजः।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते" ॥

इति स्मरणानुमितः शिष्यमुपनीय वेदाध्यापनेनाचार्यकं भावयेदित्येवं रूपः, अलौकिकं चाहवनीयादिवदाचार्यकमिति तन्निष्पत्त्युपायविधानं युक्तमेव, तत्रार्थादाचार्यो बुभूषत एवाधिकारो धनार्जननियमवत्, नत्र शिष्यं प्रति विहितहिताचरणदक्षिणादानदर्शनात्तल्लिप्सोरेवाचार्यभवनेच्छा । यथा दीक्षणीयया दीक्षितत्वसिद्धिः । तथा वेदाध्यापनेनाचार्यत्वसिद्धिः। उपनयनं च त्काप्रसेयनाध्यापनसमानकर्तृकमवगम्यमानमेकप्रयोगतया विना समानकर्तृकत्वासंभवादङ्गाङ्गिभावेन च विना एकप्रयोगत्वानुपपत्तेराचार्यकभावनाकरणीभूतमध्यापनं प्रत्यङ्गत्वेनावतिष्ठते। तदाश्रितश्चाष्टवर्षं ब्राह्मणमुपनयीतेत्यादिनियमः, उपनयनं च स्वभावत उपनेयासत्तिप्रयोजनकमिति तद्द्वारेणैव तस्याङ्गत्वं, न चाध्यापनं प्रत्यनुपयोगिन उपनेयस्यासत्तिरध्यापनोपयोगिनीत्युपनेयस्य कर्मापेक्षायामुपनयनं प्रक्रम्य स्वाध्यायोऽध्येतव्य इत्यध्ययनं विधीयमानमुपनेयस्य कर्मेत्यवगम्यते, अध्ययनं चाध्यापनोपयोगीति सिद्धमेतत् । तेनायमध्येष्यमाणस्य माणवकस्योपनयनमध्यापना-

